अनुवृत्त्यातिमृद्व्यापि तस्यापोह्यत वैकृतम् ।
ज्योत्स्नयेव शरद्भानुपरितापौष्ण्यमम्भसः ॥ ३०४६ ॥
अपि स्मरसि चारुत्वे[1] नियुक्तोऽस्मि महीभुजा ।
विशतस्ते दरद्देशमभूवं पुरतः पुरा ॥ ३०४७ ॥
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् ।
कालं क्षेप्तुं कथादैर्घ्यं नयन्मध्ये तमभ्यधाम् ॥ ३०४८ ॥
क्षुत्तृडध्वक्लामश्रान्तान्देव तानवलोक्य माम् ।
निन्दतः स्वानुगान्भोजो निर्भर्त्स्यैवं तदाब्रवीत् ॥ ३०४९ ॥
स दैवतमिवास्माकं कुलालंकरणं प्रभोः ।
वयं त्वसुकृतो यस्य नामुमः पादसेवनम् ॥ ३०५० ॥
गण्याः पर्यन्तनिःसारास्तत्संबन्धादिमे वयम् ।
चन्दनभ्रान्तिकृत्काष्ठं यत्स्यात्तद्गन्धवासितम् ॥ ३०५१ ॥
तच्छ्रुत्वैव दयार्द्रत्वं त्वयि यातः स लक्षितः ।
पृच्छन्पितेव किं गर्भरूपो वक्तीति मां पुनः ॥ ३०५२ ॥
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः ।
सोन्तर्बाष्पोप्यपश्यत्त्वं सान्त्वयन्तमिवाग्रतः ॥ ३०५३ ॥
सुव्यक्तमात्रासंबोधमुग्धत्वेन विहीयते ।
तत्त्ववित्कारणज्ञानादन्तःकरणवेदनम् ॥ ३०५४ ॥
अश्रद्दधानस्तामिच्छां भोजस्याकृच्छ्रवर्तिनः ।
प्रतिदूतीकृते तस्मिन्धन्यो न प्रत्ययं दधे ॥ ३०५५ ॥
देविताभूद्यथा नागवृत्तान्तेन भवेत्तथा ।
महीभुजं मोहयितुं मायया दीव्यते मया ॥ ३०५६ ॥

---

१ चारत्वे इत्युचितम् ।

मा भूद्भिन्नोयमित्येवमुक्त्वा बलहरं रहः ।
व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥ ३०५७ ॥

युग्मम् ॥

तत्कालयोग्यसाचिव्यश्चक्रिकाचतुरस्तथा ।
तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥ ३०५८ ॥
स बालकतया नित्यस्वतन्त्रश्चक्रिकां स्वयम् ।
आचरेदिति नाशङ्कां भोजे बलहरोभजत् ॥ ३०५९ ॥
पार्थिवः प्रार्थितः संधिं दूतमास्तं प्रतीक्षते ।
प्रत्यागतेन तेनेति ततो भोजोभ्यधीयत ॥ ३०६० ॥
तत्रासन्निहितान्याप्तः स्त्रीत्वादप्रतिभामपि ।
धात्रीं नोनाभिधानां स्वां राज्ञोभ्यर्णं व्यसर्जयत् ॥३०६१॥
मृतेन पित्रा मात्रा च हीने तमनुयातया ।
मातृकृत्यं ययात्रासीच्छैशवे माननीयया ॥ ३०६२ ॥
पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् ।
सखीकृत्यं सपत्नीनां यया शान्तेर्ष्यया कृतम् ॥ ३०६३ ॥
[1]ह्रासोल्लासो हि कार्याणां योग्यकृत्याप्तनिश्चयात् ।
न यां सुक्षत्रियां क्ष्माभृत्संभ्रान्तां जातु वीक्षते ॥ ३०६४ ॥
श्वशुरेण प्रजाभिश्च कृतं राज्ञोभिषेचने ।
आशास्यं वा महादेवी पट्टबन्धं समादधे ॥ ३०६५ ॥
अपत्यप्रियताभोगलोभभर्तृप्रसादनैः ।
प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ॥ ३०६६ ॥
[2]स्वत्रान्यत्र च संधाने जाते भर्तुरभिन्नधीः ।
भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसङ्गता ॥ ३०६७ ॥

---

१ ह्रासोल्लासे इत्युचितम् । २ स्वस्यान्यस्य इति स्यात् ।

आबाल्याद्भावविद्भर्तुः कुसृत्यनुसृतौ न सा।
कार्यमध्यं विगाहेत मानाभिजनरक्षिणी॥ ३०६८॥
इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात्।
प्रस्थानपदयात्रां सा सीमन्ताप्रापणावधि॥ ३०६९॥
कुलकम्॥
गुप्त्यै लन्नकवित्तादिपरार्ध्यं मध्यपातिनम्।
पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः॥ ३०७०॥
प्रापयामास किंचाष्टौ प्रकृष्टाभिजनोद्भवान्।
पालनार्थं राजपुत्रान्देवीवत्सर्वसंविदम्॥ ३०७१॥
युग्मम्॥
[1]वाचकं तद्गृहीत्वा तामागमत्पार्थिवेव सः।
धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम्॥३०७२॥
विहितप्रत्ययस्तस्याः सद्यः स्याच्चु महीपतिः।
राजधर्मस्य च वसन्नासीद्दोलाकुलाशयः॥ ३०७३॥
स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया।
संकटान्मोचितव्यासौ यायात्कालेन विक्रियाम्॥ ३०७४॥
अनिःशोषितजीमूतजालमाविर्भवन्रविः।
अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम्॥ ३०७५॥
मुग्धान्निरनुसंधाननागबाधादवेत्य नः।
[2]स्वस्थस्य सिद्धये माया तेनेयं निरमायि वा॥ ३०७६॥
लब्धलक्षेपरिक्षीणे शक्ते यूनि गणाश्रिते।
क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते॥ ३०७७॥
अवल्लि कौङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम्।
अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम्॥ ३०७८॥

१ वाचिकं इत्युचितम्। २ स्वार्थस्य इति स्यात्।

न त्याज्यो राजपुत्रोसावेवं मायानिधिर्यदि ।
एवं विवर्तश्चेत्तस्मिन्नदृष्टे किं दृशोः फलम् ॥ ३०७९ ॥
राज्ञी राजात्मजाश्चैते प्रतिष्ठाभङ्गशंसिनः ।
ऋजुप्रभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ॥ ३०८० ॥
अटिलं कुटिलं स्पष्टं शरत्सर्वैर्न लक्ष्यते ।
कान्ताकुन्तलनिःस्यन्दी तोयबिन्दुरिवाक्रमः ॥ ३०८१ ॥
इति ध्यात्वा राजधर्मं सत्यप्रज्ञोचितं व्यधात् ।
धन्यरिल्हणयोः कार्यं श्रुतावन्यान्विसर्जयन् ॥ ३०८२ ॥
स्वस्यैवार्थस्य दार्ढ्याय साल्हणिस्त्वां दिदृक्षते ।
समागमायेत्युक्त्वाथ धन्यो दूतैरनीयत ॥ ३०८३ ॥
मा भैषीरेष संधित्सुः सैन्यादिति मितानुगः ।
अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ॥ ३०८४ ॥
सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे ।
गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ॥ ३०८५ ॥
अवाप्तयैर्ष्ययालङ्घ्यभावं यान्त्यपि दन्तिनाम् ।
रुद्धः सिन्धावभूत्सोथ द्विषां रन्ध्रैषिणां वशे ॥ ३०८६ ॥
सिन्धोरुभयतस्तोयैर्व्याप्ततीरभुवोन्तरे ।
ते दिण्डीरोपमां[1] प्रापुः पिण्डिताः पाण्डुवाससः ॥ ३०८७ ॥
खशकानां सहस्राणि भोजस्य पतिते बले ।
स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयत् ॥ ३०८८ ॥
दृग्भ्यां संभ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव ।
कर्णौ सल्हणसूनुस्तान्संतर्ज्य वृजिनोब्रवीत् ॥ ३०८९ ॥
निर्दम्भमस्य विस्रम्भाद्धावतो विहिते [2]विधेः ।
निरत्ययो निपातः स्यान्नियतं निरये पुनः ॥ ३०९० ॥

१ डिण्डीरोपमां इत्युचितम् । २ वधे इति स्यात् ।

हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः।
नैकपक्षक्षये तार्क्ष्यरंहः संहारमर्हति ॥ ३०९१ ॥
अपिवा वाच्यता राज्ञामेवं विस्रब्धबोधनात्[1]।
तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ॥ ३०९२ ॥
यथायं वृत्तयेनन्यकर्मा रूपं[2] निषेवते।
तथा ममापि यत्नोयं तत्सेवासादने यतः ॥ ३०९३ ॥
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः।
ते न्यषिध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ॥ ३०९४ ॥
रात्रौ तथैवादारिद्याच्छिद्रं तद्रक्षितुं ततः।
कारिताः कोशपानं ते तमर्थं सोपि बोधितः ॥ ३०९५ ॥
तेनावेदितनिर्व्याजतया धीरो महीपतिः।
अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ॥ ३०९६ ॥
अज्ञातनिश्चयासिद्धेर्विनान्तःकरणं परैः।
अथ प्रास्थापयद्देवीं सामात्यां तारमूलकम् ॥ ३०९७ ॥
राजधर्मविधेयत्वादवार्यक्रूर[3]शङ्किनी।
प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ॥ ३०९८ ॥
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत्।
आर्यपुत्र विचार्योसि विस्रम्भः किं विरोधिनाम् ॥ ३०९९॥
यद्वा निर्मानुषोन्मेषां शेमुषीं त्वं विगाहितुम्।
प्रथते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ॥ ३१०० ॥
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते।
सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ॥ ३१०१ ॥
व्यञ्जितास्य सदाचारं कलिकृत्यं द्विषि त्वयि।
प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ॥ ३१०२ ॥

---

१ बन्धनात् इति स्यात्। २ भूपं इति स्यात्। ३ क्रौर्य इति स्यात्।

न गृह्णाति शमं वेत्ति स्वस्यान्यस्य न चान्तरम् ।
निर्व्यूढमददोषोद्य प्रायेण प्राकृतो जनः ॥ ३१०३ ॥
पुत्रमन्त्र्यविरोधादिबुद्ध्यशुद्ध्या प्रधावति ।
साध्वाचारोपि भूपालः क्रुध्यन्विस्रब्धबाधने ॥ ३१०४ ॥
समयालङ्घनामोघगिरा देवेन पीयते ।
लोकत्रयैकपात्रेस्मिन्यशो नूनं मया सह ॥ ३१०५ ॥
त्रातव्यसंक्षयोपेक्ष्यप्राणायास्त्वन्यदाशयः ।
ममैवास्वादयन्त्यादादात्मंभरिपुरास्थितिः ॥ ३१०६ ॥
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः ।
शान्तशङ्कामकृत्वा तां मातामन्त्र्यान्ययोजयत् ॥ ३१०७ ॥
भङ्गं सर्वानयं त्रातुं प्रयोक्तुं वेदनं नृपः ।
संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ॥ ३१०८ ॥
उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि ।
नान्यदस्य प्रयोक्तव्यं यदवाशिष्यत क्वचित् ॥ ३१०९ ॥
सपक्षभेदाद्भूभर्तुः सबलत्वाबलत्वयोः ।
परीक्षकत्वाद्ये केचिन्माध्यस्थ्येनावसन्कचित् ॥ ३११० ॥
तेप्यल्पे वा महान्तो वा क्षीणदाक्षिण्यशृङ्खलाः ।
भोजगृह्यैः सहाबध्नन्कन्थां सर्वेपि डामराः ॥ ३१११ ॥
ते ह्यच्छिन्नतटस्थत्वाद्वैराज्येस्माभिरीदृशाः ।
भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥ ३११२ ॥
त्रिल्लको भोजसविधं तनूजं प्राहिणोद्द्रुतम् ।
प्रावेशयच्छमालां च चतुष्कं पुष्कलैर्बलैः ॥ ३११३ ॥
ये भिक्षुविप्लवेप्यासन्राजदाक्षिण्यरक्षिणः ।
विरोधिसविधं प्रापुस्तेपि नीलाश्वडामराः ॥ ३११४ ॥

लहराद्देवसरसाङ्कोलाडातश्च डामराः ।
त्रयो नीलाश्वतश्चैका डामरी पर्यशिष्यत ॥ ३११५ ॥
न व्यरंसीद्धिमं तत्तल्लवन्ये साल्हणेर्बले ।
पतत्प्रावृट्प्रमत्तौघघोषोम्भोधाविवोद्धतः ॥ ३११६ ॥
भोजस्तु देवीमायान्तीं श्रुत्वा बलहरस्ततः ।
ध्रुवं संधित्सया बद्ध इति सुव्यक्तमभ्यधात् ॥ ३११७ ॥
एतावन्ति दिनान्यासीत्पुंसो भ्रमयिता पुमान् ।
संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोन्यथा भवेत् ॥ ३११८ ॥
कुलचूडामणिः प्रेम्णा स यत्रैवं प्रवर्तते ।
किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशाम् ॥ ३११९ ॥
यच्च मायामिमां ब्रूथ तत्तथास्त्वसि वञ्चितः ।
विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥ ३१२० ॥
मा च भूद्विजयाशा वः समेता निखिला इति ।
अद्राक्ष्म चेदृशां व्यूहामवरुक्ष्याम वोन्नतेः ॥ ३१२१ ॥
युक्तियुक्तमिदं चान्यच्चोक्तवान्बहु निश्चयात् ।
नाशक्यतान्यथा कर्तुं भोजो बलहरादिभिः ॥ ३१२२ ॥
द्वित्राहान्तरितेमित्रप्रमाथेपरथा कथम् ।
फलकालेसि संवृत्त इति तं चावदन्नृपाः ॥ ३१२३ ॥
तारमूलस्थिते राज्ञि ससैन्यौ धन्यरिल्हणौ ।
राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥ ३१२४ ॥
प्राप्ताववेत्य तौ नद्यास्तीरेवाचि कृतस्थिती ।
परस्मिन्कूलगहने भोजोप्येतावुपाविशत् ॥ ३१२५ ॥
अश्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् ।
पश्यन्तः केपि संधिं न श्रद्दधुर्नृपतेर्बले ॥ ३१२६ ॥

हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् ।
धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥ ३१२७ ॥
छित्त्वा सुय्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः ।
महापद्मसरोनौषु निभृतं केचनावसन् ॥ ३१२८ ॥
अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः ।
स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥ ३१२९ ॥
आस्कन्दं भाङ्गिलेयाद्याः पुरे शंकरवर्मणः ।
शमालाक्षितिकावार्तिं डामराः समचिन्तयन् ॥ ३१३० ॥
प्राप्यं महासरित्कूलं त्रिल्लकाद्यैरगण्यत ।
नीलाश्वडामरैर्वीशा कार्या च नगरान्तरे ॥ ३१३१ ॥
किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः ।
कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन् ॥ ३१३२ ॥
संदिग्धशिक्षितं कार्यं सर्वतः समतां तदा ।
प्राप वृष्टेरवग्राहग्रहयोगान्तरस्थितेः ॥ ३१३३ ॥
पदे पदे राजचमूपथायोत्थानमिच्छतः ।
च्छिन्दन्बलहरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥ ३१३४ ॥
क्षणे क्षणे विसंधानध्यायिना तेन कश्चन ।
बाध्यमानस्वान्तरायः संविधासु व्यचीर्यत ॥ ३१३५ ॥
घटनामुद्ययौ यो यो विरोधः कटकद्वयात् ।
सत्त्वैकाग्रः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥ ३१३६ ॥
दूत्ये च कल्पकत्वे वा येरुवन्राजरञ्जकाः[1] ।
भयेन प्रययुस्ते यद्वैकल्यं कार्यसंकटे ॥ ३१३७ ॥
कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्धोषितं
तन्नम्राङ्गतया वदन्ति करुणं यस्मान्नपावान्भवेत् ।

---

१ येभवन् इति स्यात् ।

श्लाघन्ते तदुदीर्यते यदरिणाप्युग्रेण मर्मान्तकृ-
द्ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतो रञ्जकाः॥३१३८॥
भाण्डस्ताण्डवमण्डपे कटुकथावीचीषु कन्थाकवि-
गोंष्ठश्वा स्वगृहाङ्गने शिखरिभूगर्भे खटाकुः स्फुटम्।
पिण्डीशूरतया विटश्च पटुतां भूभृद्गृहे गाहते
गच्छन्ति हृदकृष्टकच्छपतुलां चित्रं ततोन्यत्र ते॥ ३१३९॥
शूरोद्रेकविपर्यासाच्छान्तोष्मा क्ष्माभृतस्ततः।
वासरः शरणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥ ३१४० ॥
भानुर्दत्तपदोनूरोर्भ्रातुर्गोवलयान्तरे।
क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥ ३१४१ ॥
अहस्त्रियामामुखयोरपि मध्यस्थया दधे।
संध्यया वन्दनीयत्वं जनस्य व्याञ्जिताञ्जलेः॥ ३१४२ ॥
कवाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः शिरोद्गमः।
श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥ ३१४३ ॥
सदैन्येष्वरविन्देषु हीनद्वन्द्वोपजीवनैः।
कवाटिनां कटेष्वेव षट्पदैर्घटितं पदम् ॥ ३१४४ ॥
अदृष्टकार्यपर्यन्तास्ततस्ते विषमास्थिताः।
सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः॥ ३१४५ ॥
न किंचित्प्रत्यभा'''त्स्वं लघु भ्रान्तं च जानताम्।
ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥ ३१४६ ॥
तीरे परस्मिन्सरितो वसन्बलहरः पुनः।
रुद्धः कन्दलितास्कन्दो[1] बुद्धिः साल्हणिनासकृत् ॥३१४७॥
कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम्।
तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥ ३१४८ ॥

१ स्कन्दबुद्धिः इत्युचितम्।

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा ।
तथा तथापतद्रात्रौ लोकः श्रान्तो व्यवर्तत ॥ ३१४९ ॥
लेखैर्डामरसंहारखण्डनाय विसर्जितैः ।
सान्तरैर्ग्रथिताबाह्यैर्नानाग्रे राजवीजिनः ॥ ३१५० ॥
शाठ्यान्वितैरनुसरैस्तुमुलोत्पादनैरपि ।
धीरो धैर्यान्निश्चयाद्वा स्वैः स क्रष्टुं न पारितः ॥ ३१५१ ॥
सामन्तानामागतानामविस्रम्भादसंभ्रमम् ।
न्यक्कृतोयं निपत्याशु कुर्यादत्याहितं रुषा ॥ ३१५२ ॥
कृते च कदनोंकारेनेन सर्वे समुन्मिषेत् ।
द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥ ३१५३ ॥
इति निर्ध्याय दुध्रुक्षुरिव भोजः क्षपात्यये ।
कुर्मः साहसमित्युक्त्वा निन्ये बलहरं समम् ॥ ३१५४ ॥
तिलकम् ॥
तेषां तदर्थायातानां सामन्तानामभोजने ।
दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥ ३१५५ ॥
तथा स मत्वा वैमत्यं तमज्ञात्वा तु मन्त्रिणः ।
निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥ ३१५६ ॥
पक्षिपक्षस्फुटास्फालशफरस्फुरितेप्यधात् ।
तेषामासविधास्कन्दं प्रधावदाहितभ्रमम् ॥ ३१५७ ॥
कूले परस्मिन्कूलिन्याः स्वाभिसंधाननिर्वृतैः ।
समभाव्यत तैर्नान्यो रथाङ्गेभ्योभिषङ्गभाक् ॥ ३१५८ ॥
मरुत्काकुत्स्थदूतस्य कपेस्तीर्णाम्बुधेः पिता ।
ततान तेषां दूतानां सरित्पारगतो बलम् ॥ ३१५९ ॥
कीर्णकर्णज्वरांश्चारीन्पीत्कृतैस्तीरभूरुहाम् ।
आश्रित्योन्निद्रकेणेत्थं निन्युस्ते तां निशीथिनीम् ॥ ३१६० ॥

क्षपान्ते क्ष्माधरोत्तंसहेमतामरसभ्रमम् ।
उद्गच्छतो रवेर्यावच्चिच्छिदुर्न करच्छटाः ॥ ३१६१ ॥
चक्राह्वविरहालोकसशोकानामिवागलत् ।
कुट्मलाक्षिपुटाद्यावन्नैशं नाम्भश्च वीरुधाम् ॥ ३१६२ ॥
मितपत्तियुतस्तावत्तरुकच्छाद्विनिर्गतः ।
स वीरस्त्वरयन्युद्धवाहान्मूर्ध्न्यङ्घ्रिणा स्पृशन् ॥ ३१६३ ॥
रोद्धुकामाण्डामरीयान्वीरान्दृष्टैर्विलोकितैः ।
सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ॥ ३१६४ ॥
पारश्वधी चारुवेषो युवा संमुखमापतन् ।
युग्याधिरूढस्तैः प्रैक्षि संप्राप्तः सरितस्तटम् ॥ ३१६५ ॥
कुलकम् ॥

अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकम् ।
कुङ्कुमालेपिनं चैते भोजोयमिति मेनिरे ॥ ३१६६ ॥
अतिवाह्य निशां राजवदनं तं विमोहयन् ।
प्रातश्च तरसामन्त्र्य स तथा संमुखो ह्यभूत् ॥ ३१६७ ॥
प्रविष्टयुग्यं तोयान्तः पाराद्धावितवाजिनः ।
धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ॥ ३१६८ ॥
उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः ।
एकत्राक्रान्तिमुखरः परत्रानन्दनिर्भरः ॥ ३१६९ ॥
नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधावितैः ।
तं पैरैर्मिलितं वीक्ष्य मूर्च्छ्यताज्यत डामरैः ॥ ३१७० ॥
तस्याभिनन्दनालापप्रमुखा प्रक्रियाभवत् ।
अदैन्य[1]शुद्धधन्यादिष्वनुज्झितनिजक्रमा ॥ ३१७१ ॥

---

१ अदैन्यशुद्धा इति स्यात् ।

प्लवमानं मनोहर्षं वेगात्संस्तम्भ्य सर्वतः ।
अथेत्थं स्तुवता तत्तत्स धन्येनाभ्यधीयत ॥ ३१७२ ॥
राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना ।
त्वया धाम्ना सुमनसां मेरुणा वा महीभृता ॥ ३१७३ ॥
गर्वाञ्जयति सर्वासां निर्विकारतया वसन् ।
विक्रियोपहृतं गौस्ते क्षीरं तं क्षीरवारिधेः ॥ ३१७४ ॥
कस्य पुंस्कोकिलस्येव त्वां विनाधममध्यतः ।
निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ॥ ३१७५ ॥
सदाचारस्य भवता प्रथमं प्रहते पथि ।
न तच्चित्रं संचरामश्चरमं चेत्ततोधिकम् ॥ ३१७६ ॥
इत्यादि प्रस्तुतालापदत्तोल्लापोधिरोह्य सः ।
जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ॥ ३१७७ ॥
लवन्याः कतिचित्क्रोधाद्विक्रोशन्तस्तदा ययुः ।
स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ॥ ३१७८ ॥
स एवमेकविंशेब्दे ज्येष्ठस्य दशमेहनि ।
त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ॥ ३१७९ ॥
राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवागतम् ।
अभ्यनन्दच्छ्रान्तभृत्यमस्याहारमकल्पयत् ॥ ३१८० ॥
इन्दुवंशाविसंवादिगुणग्राममवेक्ष्य तम् ।
प्रागदृष्टवती मेने वञ्चिते सा विलोचने ॥ ३१८१ ॥
गुणैरशाठ्यदाक्षिण्यमाधुर्याद्यैरकृत्रिमैः ।
तस्याविशदशीलं स क्षमापतिरमन्यत ॥ ३१८२ ॥
[1]मुखरागं मनोवृत्तेर्द्वारौज्ज्वल्यं गृहश्रियः ।
भर्तुस्स्वभावस्याचारो योषितामनुमापकः ॥ ३१८३ ॥

---

१ मुखरागो इति स्यात् ।

दिनक्षयव्यञ्जिताध्वक्रमं प्रस्थातुमुत्सुकम् ।
राज्ञोभ्यर्णं विशेत्येनं दाक्षिण्यात्कोपि नाब्रवीत् ॥ ३१८४ ॥
कथंचिद्वृद्धमाध्यस्थ्यवैमत्यैः सचिवैरथ ।
स त्वादिक्षुर्नरपतिरशान्तेभ्योभ्यधीयत ॥ ३१८५ ॥
राज्ञोभ्यर्णं विशेत्युक्तेरुपोद्घातोपमं वचः ।
तत्तस्य श्रोत्रशष्कुल्यां तदा शङ्कुक्रियां व्यधात् ॥ ३१८६ ॥
चिरात्ताडितमर्मेव समाश्वास्यैक्षताथ सः ।
मध्यस्थानां स्थितं स्थैर्यं दाक्षिण्यादोष्ठयोः परम् ॥३१८७॥
प्राणान्मुमुक्षोस्तेरूक्षभाषणास्तस्य सान्त्वनैः ।
मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ॥ ३१८८ ॥
आचारं चैनमस्निग्धमपि न्याय्यं वचस्विनम् ।
न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ॥ ३१८९ ॥
अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव ।
दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ॥ ३१९० ॥
पद्धती राजधर्माणां सदाचारे स्थितां[1] च ते ।
जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ॥ ३१९१ ॥
किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् ।
अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ॥ ३१९२ ॥
अनद्यतनभूभर्तृसुलभे[2] भूभुजां तव ।
ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मजातप्रवर्तनम् ॥ ३१९३ ॥
नास्य दम्भस्मयस्तम्भः प्रीतिस्थैर्यखलोक्तयः ।
आदरादर्शवैषद्ये निःश्वासस्यापि काः श्रियः ॥ ३१९४ ॥
अस्योपजीवनाद्या श्रीः साम्राज्यासादनान्न सैः[3] ।
प्रकाशो बिम्बितो योर्काद्दीपात्स्याज्ज्वलतः स किम् ॥३१९५

१ स्थितिं इति स्यात् । २ सुलभं इति स्यात् । ३ सा इत्युचितम् ।

निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत् ।
तत्पर्षद्यस्य राजर्षेर्जनान्वृन्दानुबन्धिनः ॥ ३१९६ ॥
एवं स्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते ।
स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीधरैः ॥ ३१९७ ॥
मुग्धा न केचन परे गणिताः फणिभ्यः
कालानुकूलनिजकुण्डजलत्यजो ये ।
श्लिष्यन्ति चन्दनतरूञ्शिशिरान्निदाघे
माघेऽप्यशीतमनवं विवरं विशन्ति ॥ ३१९८ ॥
प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये ।
तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ॥ ३१९९ ॥
त्यक्तोष्मवैकृतं पाथ इव क्वथितशीतलम् ।
अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ॥ ३२०० ॥
तथा समर्थासामर्थ्यान्न प्रत्याख्याय भारतीम् ।
कुण्ठशाठ्यलवस्तस्थौ प्रस्थानार्थं स मन्थरः ॥ ३२०१ ॥
पथि संग्रथितस्तोत्रान्वास्तव्यान्वीक्ष्य सर्वतः ।
अजायताथ संरूढकृत्यसाधुत्वदार्ढ्यधीः ॥ ३२०२ ॥
पदातिचरणक्षुण्णरेणुव्याजाददृश्यत ।
वसुंधरातलं बद्धसंधीव नभसा समम् ॥ ३२०३ ॥
दध्यौ विश्वतरो भोजः कच्चित्संप्राप्नुयां नृपम् ।
कच्चिदमुष्य[1] विघ्न्येत दर्शनं विप्रलम्भकैः ॥ ३२०४ ॥
आराधयन्प्रभुं धाम्नि नान्तरान्तरितो विटैः ।
स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ॥ ३२०५ ॥
शीतोपचारकरणाद्दयितो भवेय-
मौर्वार्दितस्य जलधेः प्रसृतं धियेति ।

---

१ कच्चिन्नामुष्य इति स्यात् ।

स्रोतो हिमाद्रिपयसो विनिपात एव
ग्रासीकृतं तिमिभिराहतमेव तत्स्यात् ॥ ३२०६ ॥
इत्यादिचिन्तास्तैमित्यात्पुरक्षोभाद्यलक्षयन् ।
सैन्यस्य रुद्धाश्वतयाबुद्धासन्नं नृपास्पदम् ॥ ३२०७ ॥
नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् ।
सरोजकर्णिकागौरं शिथिलश्लथविग्रहम् ॥ ३२०८ ॥
ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् ।
श्मश्रुणानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ॥ ३२०९ ॥
उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणालिकम् ।
तिर्यग्विप्रेक्ष·······धीरमन्थरगामिनम् ॥ ३२१० ॥
समाहितांशुकोष्णीषमौलिं श्रीखण्डवक्षसम् ।
सीमन्तस्थानचुम्बिन्या रेखया चन्द्रगौरया ॥ ३२११ ॥
अश्वावरूढं हर्म्येस्थसचिवैः[1] परिवारितम् ।
अनङ्गतुल्यमायान्तं तमवैक्षत पार्थिवम्[2] ॥ ३२१२ ॥

कुलकम् ॥

प्रीतिविस्फारितदृशा राज्ञा पृष्टस्ततः सभाम् ।
सोध्यारुरोह संबाधां कौतुकोत्कंधरैर्जनैः ॥ ३२१३ ॥
स्पृष्ट्वा पादौ निषण्णोग्रे नृपस्यानीय पाणिना ।
खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत् ॥ ३२१४ ॥
पाणिं सफणिवल्लीकं विवृताग्राङ्गुलिद्वयम् ।
ततोस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोब्रवीत् ॥ ३२१५ ॥
न विगृह्य गृहीतोसि नाधुनापि न[3] बध्यसे ।
तदङ्ग कस्माद्व्रीडितमः शस्त्रमेतत्त्वयार्पितम् ॥ ३२१६ ॥

---

१ हर्म्यस्थः इति स्यात् । २ पार्थिवः इति स्यात् । ३ निबध्यसे इति स्यात् ।

व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् ।
स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥ ३२१७ ॥
देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ ।
सेवावकाशो विरलः स्वशस्त्रस्यापि दृश्यते ॥ ३२१८ ॥
लोकान्तरेपि शरणं चरणाश्रयणं प्रभोः ।
तत्रात्र लोके किं कार्यं त्राणोपकरणैः परैः ॥ ३२१९ ॥
राजा जगाद तं सत्त्वस्पर्धाबन्धेधुना भवान् ।
निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥ ३२२० ॥
भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः ।
[1]सृष्टादृते मया किंचिन्नोपचारार्थमुच्यते ॥ ३२२१ ॥
किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् ।
यदसिद्धं न तद्व्यक्तिमगादित्यवधार्यताम् ॥ ३२२२ ॥
किं न मल्लान्वये कश्चित्कारणेषूदितो भवान् ।
विघ्नः स्यानतुकूलं प्राग्यं वयं चर्मचक्षुषः ॥ ३२२३ ॥
यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये ।
भूमिस्तदा तदा भूता पात्रं कम्पस्य भूयसः ॥ ३२२४ ॥
यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः ।
देवाभवन्नः प्रत्यक्षः प्रतापस्तादृशस्तव ॥ ३२२५ ॥
न शेखरे न प्रदरे न दरेप्युज्झितो मया ।
[2]प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥ ३२२६ ॥
ततः प्रभृत्यवनतिप्रणयः शरणैषिणः ।
सिद्धः संध्यायि वन्ध्यत्वाद्देव दूरस्थितेन मे ॥ ३२२७ ॥
अथाभेदाभिलाषेण पापाद्यत्किल चेष्टितम् ।
स्फुरत्तामात्रकव्यक्त्यै न तु तद्विग्रहाग्रहात् ॥ ३२२८ ॥

१ दृष्टादृते इति स्यात् । २ प्रालेयभूभृतः इति स्यात् ।

त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां वयम् ।
सङ्गाद्गङ्गाम्भसः काचकुम्भसंभावना भुवि ॥ ३२२९ ॥
अद्यापि द्योतते शाहेवाह्वयेन दिगन्तरे ।
तत्संतानभवोनन्तः समूहः क्षत्रजन्मनाम् ॥ ३२३० ॥
त्वय्यर्पिते पार्वतीयभूभृत्सङ्केन्यदादिनः ।
कदन्नाशनदुर्भोगासुस्थैः खेदोन्मुखैरभूत् ॥ ३२३१ ॥
इतीदृशीभिः स्तुतिभिः प्रमाणमथवा प्रभुः ।
इत्युक्त्वा भूपतेर्मूर्ध्ना सोगृह्णाच्चरणौ पुनः ॥ ३२३२ ॥
प्रणामसंभ्रमस्रस्तोष्णीषशीर्षं ततो नृपः ।
तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥ ३२३३ ॥
स्वां तां च शस्त्रीं तन्न्यस्तामुत्सङ्गे सान्त्वयन्व्यधात् ।
तस्यासंक्षोभगाम्भीर्यस्तमूचे च निषेधिनम् ॥ ३२३४ ॥
दत्तं[1] मया बिभृहि वा त्वमेते पूजयाथ वा ।
न शस्त्रग्रहवैमुख्यं कार्यं मच्छासनं त्वया ॥ ३२३५ ॥
अवन्ध्यशासनो मानीत्यनुबध्नाति ते व्यधात् ।
शस्त्रौ[2] राजानुगत्यैव वन्दित्वा कामकालवित् ॥ ३२३६ ॥
ततो निर्यन्त्रणत्वस्य नर्मणः सान्त्वनस्य च ।
चिरसेवीव तत्कालं राज्ञो जायत भाजनम् ॥ ३२३७ ॥
अन्यत्प्रविष्टो धन्योथ स्वार्थामकथयत्कृती ।
कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥ ३२३८ ॥
न प्राणा द्रविणं नाद्य गण्यं निर्विक्रिया पुनः ।
सत्क्रिया स्वामिनोप्यर्थे तस्मात्पार्थिव चिन्त्यताम् ॥ ३२३९ ॥
तथापि कथ्यमानं तन्न स्यात्संभावनाभुवि ।
यदास्मिंश्चिन्त्यतेस्माभिरिति भूपोप्यभाषत ॥ ३२४० ॥

---

१ दत्ते इति स्यात् । २ शस्त्र्यौ इति स्यात् ।

क्षणमुच्चावचां चर्चां विरचय्य विशांपतिः ।
भोजेन सार्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ॥ ३२४१ ॥
कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् ।
स राजपारिजातं तं मेने कल्पलतायुतम् ॥ ३२४२ ॥
मान्योयं देवि सौजन्यज्ञातेयाभ्यामिहागतः ।
विशिष्यतेसौ पुत्रेषु क्ष्माभृद्योषेत्यभाषत ॥ ३२४३ ॥
सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः ।
उदूढकार्यभाराणां दाराणामप्यगाद्गृहान् ॥ ३२४४ ॥
अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् ।
अधुनैव नृपस्याप्तः संवृत्तोसीति सस्मितम् ॥ ३२४५ ॥
लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु ।
ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥ ३२४६ ॥
आर्यपुत्र न विस्मार्यं प्रत्याख्याताप्तमन्त्रितम् ।
मानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥ ३२४७ ॥
पूर्वोपकर्तृ सलिलं वृद्धावस्पृशतोन्वहम् ।
पद्मान्मुकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥ ३२४८ ॥
कार्यकृच्छ्रेवसन्नानाममुष्यागमनं विना ।
सिध्येदौन्नत्यसंरक्षा नेह प्रत्यागमश्च नः ॥ ३२४९ ॥
उद्दीपे रक्षतस्तीरं शरीराश्रयिणी भवेत् ।
ध्रुवं वनस्पतेर्वीरुत्तन्निपातानुपातिनी ॥ ३२५० ॥
पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् ।
तथा कार्यं यथा न स्याज्ज्ञातव्यस्यान्यथात्मनः ॥ ३२५१ ॥
राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी ।
अन्यथा प्रतिपत्तिं मे त्वमप्यस्य न मन्यसे ॥ ३२५२ ॥

निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि ।
निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥ ३२५३ ॥
अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः ।
भोजो नामन्यतान्यत्र राजधान्यां स्थिरां स्थितिम् ॥३२५४
विदूराश्रयनिर्गोप्तृभावाप्रचुरदर्शनैः ।
आराधनं धराभर्तुरसाध्यं ध्यातवान्हि सः ॥ ३२५५ ॥
रक्षितॄनग्रहीत्क्ष्मापान्स्थिरं च समकल्पयत् ।
अनयातां नृपं कार्यान सुराराधनागमे ॥ ३२५६ ॥
विज्ञाय भावं प्रीतेन राज्ञा दत्तं ततो गृहम् ।
सर्वोपकरणापूर्णं राजधान्यन्तरेऽभजत् ॥ ३२५७ ॥
राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा ।
उपासितस्तत्र रतिं चिराश्रित इवाययौ ॥ ३२५८ ॥
भोगवेलोचिताश्चर्यदर्शनादौ नृपोपि तम् ।
प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥ ३२५९ ॥
जग्राह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् ।
स्पर्शास्वादितभोज्यादिदानेनैव व्यसर्जयत् ॥ ३२६० ॥
अकृत्रिमं तथा स्नेहमुवाह जनको यथा ।
लडितं ज्ञातिवत्तस्मिंस्तद्बालापत्यकैः समम् ॥ ३२६१ ॥
तमेवालम्बत व्यक्तिं सोपि वृत्तिं यथा यथा ।
राजा सपरिबर्होपि बिस्रम्भमविगर्हितम् ॥ ३२६२ ॥
आसन्नाभ्यन्तराभिन्ना ये द्वैधे तानदर्शयत् ।
राज्ञां विरक्तिं स्वस्यारिबाहुल्यं च व्यसजर्यत् ॥ ३२६३ ॥
अकृत्रिमात्समाधानात्कारणानां सभान्तरे ।
न प्रत्यभाज्जडो नापि धृष्टो नापि बकव्रतः ॥ ३२६४ ॥

प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः ।
कार्ये नावदधे क्षुद्रः कवितेव महाकवेः ॥ ३२६५ ॥
न विक्रमकथासन्नदानाद्यैः स्वं व्यकत्थत ।
प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥ ३२६६ ॥
विचारकात्प्रभोः साम्यसकुल्यत्वादिचाटुभिः ।
धीराधृष्टैर्दृष्टिपातैरपुनर्भाषिणो व्यधात् ॥ ३२६७ ॥
तथा स्पृष्टोप्यनुत्तानाशयोभूदवगाहितुम् ।
न शेकुस्तं यथा जाल्मनर्मावित्पिशुनादयः ॥ ३२६८ ॥
क्षणेष्ववसितालोकक्षोभादिविशरारुषु ।
प्रायेणावसथं गच्छञ्छङ्कां कामपि नातनोत् ॥ ३२६९ ॥
यथा यथास्य विस्रम्भाद्भूपोभूच्छिथिलाग्रहः ।
तथा तथैव सिद्धोश्व इव नाधावदुद्धतम् ॥ ३२७० ॥
सदैवाग्रेसरोन्यत्र पश्चाद्रुद्धपदोभवत् ।
अनिषिद्धोपि शुद्धान्तमन्त्रागारावगाहने ॥ ३२७१ ॥
विज्ञप्त्यौपयिकावाप्तिप्रार्थन"'दरत्स्वयम् ।
दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥ ३२७२ ॥
अनाप्तसमये तस्य न ययुः पथि रक्षिणः ।
न स्वप्नवृत्तमप्यासीदनावेद्यं महीभुजे ॥ ३२७३ ॥
मन्त्र्यन्तःपुरिकादीनां परस्परविगर्हणम् ।
नावर्णयद्विस्मृतिं च दुष्टस्वप्नमिवानयत् ॥ ३२७४ ॥
सचेतनोपि दुर्नर्मगोष्ठीष्वनुरणन्वचः ।
अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् ॥ ३२७५ ॥
एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यावित् ।
पुत्रेभ्योप्यधिकां प्रीतिं स्निह्यन्भेजे क्रमान्नृपः ॥ ३२७६ ॥

कलिकालमहीपालदुस्तरः सिंहभूभुजा ।
सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥ ३२७७ ॥
इत्थं विद्रावितशेषोपद्रवस्त्रिल्लकस्ततः ।
अग्निप्रोषमपि स्वास्थ्यहेतुं भूभृदचिन्तयत् ॥ ३२७८ ॥
असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् ।
शाठ्यं सत्त्वस्य दुःसाध्यं बद्धं ध्यायन्व्यलम्बत ॥ ३२७९ ॥
अतः सुमेधा यात्रायां यावत्क्षणमपैक्षत ।
सज्जपालेनाविचारात्तावत्प्रारम्भि धावनम् ॥ ३२८० ॥
अल्पाधिष्ठानसुभटः स देवसरसोद्भवैः ।
बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ॥ ३२८१ ॥
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् ।
बाह्याश्च योधा निःसारा दर्पान्नेति विवेद सः ॥ ३२८२ ॥
त्रिल्लकानुचरा युद्धमसंनिहितसायकाः ।
तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥ ३२८३ ॥
निःसीमसैन्यसहितो लवन्योन्यत्र डामरे ।
तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥ ३२८४ ॥
लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः ।
सर्वे ततः सज्जपालं विद्रुताः परिजह्रिरे ॥ ३२८५ ॥
द्विषत्संवर्तवर्षाद्याः सर्वत्र त्रुडितेभवन् ।
अधिष्ठाने भटा एव कुलशैला इवोद्धताः ॥ ३२८६ ॥
ते तीक्ष्णतीक्ष्णतरणौ सोढारातिरुषश्चिरम् ।
बहून्निहतवन्तोन्यांस्तत्र तत्राहवे हताः ॥ ३२८७ ॥
क्षतेषु युधि सर्वेषु भिन्दानैर्मण्डलं निजैः ।
शूरेषु तत्र मार्ताण्डोप्यासीदविरलव्रणः ॥ ३२८८ ॥

रराजाजौ साज्जपालिर्गयपालो हतेषु यः ।
त्रिषु वाजिषु चातुर्यात्पदातिर्नोपलक्षितः ॥ ३२८९ ॥
तत्प्राथम्योपलब्धाजिर्जज्जस्तदनुजः शिशुः ।
निनाय विस्मयं वीरान्दृष्टासंख्यमहाहवान् ॥ ३२९० ॥
दक्षिणं दोर्न तच्चक्रे यद्वामं कम्पनापतेः ।
महेभांस्तापयत्यर्कः कुर्याद्भग्नरदान्विधुः ॥ ३२९१ ॥
स धावन्वाजिना राजदेकदोःस्फुरितायुधः ।
सधूमदण्डो दावाग्निः सपक्षेद्राविव स्थितः ॥ ३२९२ ॥
तं वैरितुमुले बाणव्रणभङ्गेष्वसौ पुनः ।
पृष्ठादलोठयद्वाजी तदन्वाबद्धपद्धतिः ॥ ३२९३ ॥
वर्मगौरवभूपृष्ठकाठिन्याघातपीडितः ।
स विसंज्ञो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः ॥ ३२९४ ॥
कटके सर्वतो नष्टे मार्तण्डप्राङ्गनान्तरे ।
विरोध्यसाक्षि क्षिप्त्वा तं तावपासरतां ततः ॥ ३२९५ ॥
तत्रस्थं·······नाक्ष्माभृत्प्रस्थितः पृथुलैर्बलैः ।
तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥
क्ष्मापाले विजयक्षेत्रं प्राप्ते त्रोटितवेश्मनः ।
सज्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥ ३२९७ ॥
स तादृगपि भूपाले क्रुद्धे वक्रीकृतभ्रुवि ।
अदरिद्रो गिरिद्रोणीश्रेणिभूसुलभाशनः ॥ ३२९८ ॥
संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः ।
आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥ ३२९९ ॥
निकृत्तकरशाखोथ क्ष्मापकोपकपेर्व्यधात् ।
निरालम्भतया तस्य स स्वशीर्षफलार्थनाम् ॥ ३३०० ॥

रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम्।
श्रीमांल्लोहरराज्येथ क्ष्मावृषा सोभ्यषेचयत्॥ ३३०१॥
षट्सप्तहायनो राजतनयः स वयोधिकान्।
चूताङ्कुरो जीर्णतरूनिवेशानजयद्गुणैः॥ ३३०२॥
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः।
शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ॥ ३३०३॥
तत्राभिषिक्ते वसुधामुग्रावग्रहशोषिताम्।
देवीभावाभिषेकार्थमिवासिञ्चन्पयोमुचः॥ ३३०४॥
भूयोपि राजवदनो विप्लवोत्पादनोत्सुकः।
अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया॥ ३३०५॥
नागभ्रातृव्यसहिता गार्गैरनुप्रवेशिनः।
पश्चात्प्रसर्पिणीः सेनाः सोवधीत्संकटेध्वनि॥ ३३०६॥
गार्गिः परिभवम्लानाननस्तिष्ठन्दिनैस्ततः।
नागभ्रातृसुताग्रस्थमवधाल्लोष्टकं मृधे॥ ३३०७॥
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च।
दग्ध्वा स दिन्नाग्रामं तु निरगाल्लघुविक्रमः॥ ३३०८॥
तथापि राजवदनो न शौर्यात्पर्यहीयत।
न संदधे न चुक्रोध शक्यमस्य विनिर्गमम्॥ ३३०९॥
अहन्यहनि हीनाभिः सेनाभिर्न्यपतन्नृपे।
जयचन्द्रमुखाच्छश्वदसुखान्यवधीभवत्॥ ३३१०॥
क्ष्मानायकोथ निःसीमनखबाहुप्रसारणः।
रणान्तरेव तं तीक्ष्णैर्गूढं न्यस्तैरघातयत्॥ ३३११॥
तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः।
झटिति त्रुटितः स्वास्थ्यमिवास्य स्फुरणोन्मुखः॥ ३३१२॥

पृथ्वीहरकुलच्छेदस्वच्छन्ना मेदिनीपतिः ।
अवधील्लोठनमपि च्छन्नदण्डप्रयुक्तिभिः ॥ ३३१३ ॥
एकवारं वेष्टितोपि रक्षितस्त्रिल्लकेन सः ।
भूमिभृन्नीतिपाशस्य निपातेनाभिवर्तिना ॥ ३३१४ ॥
मल्लकोष्टक्षरजय्यमङ्गुचन्द्रादयोभवन् ।
जीवन्मृताश्च शान्ताश्च दारिद्रोपप्लवार्दिताः ॥ ३३१५ ॥
अविचिन्त्योच्चलक्षोणिभृतः प्राणान्विनश्वरान् ।
ऐश्वर्यरूढिमूढत्वादनिर्व्यूढव्यवस्थितौ ॥ ३३१६ ॥
मठेनुमितकोशत्वं तत्तद्राजाश्रयाद्गते ।
कुलोद्वहो विहितवान्सिहदेवो व्यवस्थितिम् ॥ ३३१७ ॥
युग्मम् ॥

सुल्लाविहारं पैतृव्यं पितुर्देवगृहत्रयम् ।
तच्चार्धसिद्धं प्रासादं परिपूर्णं व्यधान्नृपः ॥ ३३१८ ॥
स एव ग्रामसामग्रीमहापणसमर्पणैः ।
निर्दोषपारिषद्यादिहृद्यान्निश्चोद्यधीर्व्यधात् ॥ ३३१९ ॥
अवरोधेन्दुवदनां मृतामुद्दिश्य चन्दलाम् ।
प्रत्यष्ठापि मठोनूनश्रीर्द्वारिवारितातिथिः ॥ ३३२० ॥
प्लुष्टो नगरनिर्मोहः सोपि सूर्यमतीमठः ।
पूर्वाधिकोपगर्वेण तेनैव निरमीयत ॥ ३३२१ ॥
संजाते सज्जपालस्य ततो लोकान्तराश्रये ।
कम्पने निदधे राज्ञा गयपालस्तदात्मजः ॥ ३३२२ ॥
विपाकसुकुमारोपि दुःसहः सूनुनाभवत् ।
विसारितः स सौम्येन शरद्भानुरिवेन्दुना ॥ ३३२३ ॥

ग्रीष्मोष्मदोषविषमेष्ववशेषवृत्ते-
र्मेघोदये तटतरोस्तटिनीप्रवाहः।
पश्यन्नकाण्डतडिदापतनेन नाशं
नाशंसति स्वसलिलस्य विभूतिलाभम् ॥ ३३२४ ॥

आ भिक्षुक्षपणाद्भोजसञ्जनादपि भूभुजः।
विधुरे कार्यभाराणां योभूद्दृढधुरः परम् ॥ ३३२५ ॥

तस्य तस्मिन्नुपरते क्षीणप्रक्षीणकण्टके।
स धन्यो नान्यसामान्यप्रेमा प्रमयमाययौ ॥ ३३२६ ॥

ताम्बूलमायात्रिकतां नीत्वा सूनामयानिव।
आर्पिपन्मधुरावर्त्तं जीवं यस्य निजः सुतः ॥ ३३२७ ॥

स जगज्जीवितेनापि रक्षणीयः क्षमापतिः।
पदे पदे विपन्मग्नो प्रजोद्धरणधीरधीः ॥ ३३२८ ॥

व्याधितस्य विनिद्रोपि संसङ्गान्मङ्गलेच्छुभिः।
नान्तक्षणे तस्य पार्श्वात्कृतज्ञोवाचलन्नृपः ॥ ३३२९ ॥

प्रियप्रजस्यामात्यस्य स्वरूपविपरीतता।
तस्य कंचित्क्षणं जाता जनजीवितदा भवेत् ॥ ३३३० ॥

भूभुजामपि मांधातृमुखानां निधने न याः।
दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥ ३३३१ ॥

द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत्।
अप्याहतं यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥ ३३३२ ॥

कालो बली व्यवहृतेर्ननु तद्वशेन
पूर्वापराचरणविस्मरणेन कस्य।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां
निर्दारणे मुरजितस्तु वराहतायाम् ॥ ३३३३ ॥

नगराधिकृतो भूत्वा सुज्जौ निर्वापिते पुरा ।
चिरप्ररूढां यो देशस्याव्यवस्थां न्यवारयत् ॥ ३३३४ ॥
भ्रष्टः क्रयेषु दीन्नारव्यवहारो व्यवस्थया ।
निगृह्य तं भ्रंशकार्यनिर्वितण्डः प्रवर्तते ॥ ३३३५ ॥
परिणीताङ्गनाशीलभ्रंशे गृहपतेरभूत् ।
दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥ ३३३६ ॥
एकान्ततो हितो भूत्वा विशामेवं पुनर्व्यधात् ।
नगराधिक्रियां लब्ध्वा स एव परिपीडयन् ॥ ३३३७ ॥
बद्धाभिर्नर्तकीभिश्च परिणीतगृहस्थितौ ।
संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥ ३३३८ ॥
किं वो भवेद्वलेशानां तुषाणामिव चिन्तनैः ।
अद्रोहालोभयोर्भूमिर्न तादृगपरोभवत् ॥ ३३३९ ॥
भिक्षुमल्लार्जुनौ कालानुवृत्त्या श्रितवानपि ।
नासौ जहौ स्वामिहितं नतौ तावपि नावधीत् ॥ ३३४० ॥
अक्षीणत्यागहीनस्य विभूतिसमयेप्यभूत् ।
संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥ ३३४१ ॥
कृतज्ञतायां राज्ञोन्यत्पर्याप्तं किमुदीर्यताम् ।
यो जीवित इवानीतान्संबिभेजेनुजीविनः ॥ ३३४२ ॥
लोकान्तरातिथिं विज्जाभिधामुद्दिश्य वल्लभाम् ।
धन्यस्य विज्जनामाख्यविहारारम्भकारिणः ॥ ३३४३ ॥
परलोकं प्रयातस्य निर्वाणप्रतिपूरणम् ।
स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥ ३३४४ ॥

युग्मम् ॥

भूभृद्धार्मिकतावाप्तसुकृतोत्सेकवासवैः[1]।
युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥ ३३४५ ॥
विपक्षाणां सुभिक्षेण तुरुष्कविषयाश्रयात्।
जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यन्न शिक्षितम् ॥ ३३४६ ॥
येपि वृत्तिं विरोध्याजिव्यग्रे सुस्सलभूभुजि।
कलहावसरेष्वेव कश्मीरेषु प्रपेदिरे ॥ ३३४७ ॥
गोत्रे तेषां क्षत्रियाणां जातः कमलियानुजः।
राजवीजी सङ्गियाख्यः प्रतिष्ठां स्वाख्ययाकरोत् ॥ ३३४८ ॥
वितस्तापुलिने बाणलिङ्गे तेन निवेशिते।
जायते स्वर्धुनीरोधःसंप्ररूढ[2]विमुक्तधीः ॥ ३३४९ ॥
तदीयं च मठं चैव तपोधनविभूषितम्।
दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥ ३३५० ॥
लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे।
न तेनाद्यतने काले संरब्धे शुद्धबुद्धिना ॥ ३३५१ ॥
उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः।
पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥ ३३५२ ॥
प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः।
उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥ ३३५३ ॥
सांधिविग्रहिको मङ्काख्योलंकारसोदरः।
समठस्याभवत्स्रष्टः श्रीकण्ठस्य प्रतिष्ठया ॥ ३३५४ ॥
मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः।
अनुजा सुमना नाम रिल्हणस्यासदत्तुलाम् ॥ ३३५५ ॥
भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपातयत्।
तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥ ३३५६

१ वासनैः इति स्यात्। २ संप्ररूढाविमुक्तधीः इति स्यात्।

प्रदेश्यकश्यपागाराभिधाने नीलभूः सरित् ।
जिगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता ॥ ३३५७ ॥
उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् ।
निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥ ३३५८ ॥
नगरेपि स्वनामाङ्कवृषाङ्कागारकारिणा ।
मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥ ३३५९ ॥
मम्मेश्वरं स सौवर्णामलसारं चकार यः ।
सोमतीर्थे तथा तोयोद्यानमुद्द्योतितान्तिकम् ॥ ३३६० ॥
अत्र क्षमाभुजो वंशे वंशौन्नत्यधनादिषु ।
सासूयत्वममात्यानां धनप्राणादिहारिणः ॥ ३३६१ ॥
कुध्यन्नवासनाध्यासासूयया वासवोपि वा ।
प्राभ्रंशयद्दिवो देवो मांधातारं धराभुजम् ॥ ३३६२ ॥
अविप्लुतमतिर्भृत्यान्कृत्यौन्नत्यवतोन्वहम् ।
दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥ ३३६३ ॥
कलशक्ष्मापतेः प्राग्नोपज्ञं भृत्योस्य रिल्हणः ।
कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥ ३३६४ ॥
स्वर्णपत्त्रां सुरेश्वर्यां शिवयोः समवेतयोः ।
सदीपारात्रिकामत्रमैत्रीमेति सघण्टकम् ॥ ३३६५ ॥
बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ ।
स्वर्णच्छत्रच्छलान्मेरुर्मूर्ध्न्यार्घ्रातुमुपागतः ॥ ३३६६ ॥
उद्दिश्य यद्विरुधदुद्यममात्मयोनि-
र्दग्धो मयाङ्गघटनं दयितेन गौर्याः ।
सिद्धं तदत्र करुणामुमयेति हेम-
च्छत्रच्छलाद्धरदृशश्चलितोग्निरूर्ध्वम् ॥ ३३६७ ॥

छत्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणी-
प्रेयोमन्दिरमूर्ध्नि नद्धमधुनादभ्रं परिभ्राजते ।
क्षैब्येण क्षतजावपानजनुषा नष्टं ततः स्वामिना
प्राप्तं चक्रमवेक्षितुं सुरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥
तीर्थे मन्मथजित्खगध्वजदृढाजर्योर्जिताचार्यके
साधाराभरणं क्रियापरिणतिस्वर्णातपत्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाब्जरेणूपमं
केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥
सौवर्णद्रुहिणाण्डकर्परपुरे[1] संसूत्रिताच्छत्रक-
व्याकोशस्य समुद्गकप्रतिकृतौ दीर्घार्घित'''घने ।
सङ्गेनेन्दुकिरीटकैटभरिपुश्यामासितालंक्रिया
सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्रं गतम् ॥ ३३७० ॥
तं लोहरमहीपालमन्वजायन्त भूभुजः ।
रड्डादेव्या गुणोदाराश्चत्वारश्चतुराः सुताः ॥ ३३७१ ॥
गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः ।
अभिन्नभावः संवृद्धिं वर्तते लोहरे श्रयन् ॥ ३३७२ ॥
ललितादित्यदेवेन जयापीडो हि दारकः ।
भरतेनेव शत्रुघ्नः पाल्यमानः प्रवर्तते[2] ॥ ३३७३ ॥
पार्थिवाहस्कराच्चारुनमस्काराद्यशस्करः ।
पञ्चमः क्षितिभृद्व्यर्म्यो बालातप इवोदितः ॥ ३३७४ ॥
चपलैः शैशवाच्छुद्धानुभावत्वात्ससौष्ठवैः ।
लडितैर्ललितादित्यो भित्तीरप्यार्द्रयत्यहो ॥ ३३७५ ॥
दत्तरक्षाञ्जनं ताम्राधरं गौरं तदाननम् ।
सबालातपभृङ्गाङ्कस्वर्णपङ्केरुहायते ॥ ३३७६ ॥

---

१ पुटे इत्युचितम् । २ प्रवर्धते इति स्यात् ।

आलापास्तस्य माहात्म्यगर्भा वालास्फुटा अपि ।
अमृतोद्गी भवोच्चारा मथ्यमानस्य वारिधेः ॥ ३३७७ ॥
महाभिजनसंजातो राजसूनुः स शैशवे ।
अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥ ३३७८ ॥
अत्यर्थमण्डनशिखण्डिशिखोपि तोय-
स्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।
वापीं निपीतसलिलो वलितं प्रयाति
चेष्टोक्तभावमहिमा वरवर्णिभावः ॥ ३३७९ ॥
चतस्रो मेनिला राजलक्ष्मीः पद्मश्रिया समम् ।
संजाता कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥ ३३८० ॥
विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः ।
द्योतितावनवद्यौ तौ प्रावृट्पुष्पाकराविव ॥ ३३८१ ॥
तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैर्व्ययैः ।
रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥ ३३८२ ॥
कृतानुयात्रा सा देवयात्रासु क्षितिपाङ्गना ।
राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥ ३३८३ ॥
सतीदृंशो तीर्थसार्थास्त्यजन्त्यस्या निमज्जने ।
स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥ ३३८४ ॥
चित्रे कालेत्र यात्रासु द्रष्टुं वृष्ट्युत्तरैः सदा ।
यत्प्रावृडिव····यं जीमूतैरनुगम्यते ॥ ३३८५ ॥
सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता ध्रुवम् ।
दिव्यैर्वर्षमिषात्तीर्थैः प्राद्दश्येत तदीर्ष्यया ॥ ३३८६ ॥
अभ्रंलिहान्न च गिरीन्न च कूलंकषा नदीः ।
मृद्वङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेत्त्यसौ ॥ ३३८७ ॥

१ बाल्यास्फुटा इति स्यात् । २ अमृतार्द्रा इवोद्गारा इति स्यात् ।

सुबह्वीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया।
तया चित्रं चतुरया पङ्क्तिर्दिद्दा विलङ्घिता ॥ ३३८८ ॥
अद्यापि विक्षरत्क्षीरार्णवकान्तिच्छटाच्छलात्।
यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः ॥ ३३८९ ॥
उपमन्योरुदन्याया दारिद्र्योपद्रवापहः।
रुद्रो रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ॥ ३३९० ॥
जगत्सौन्दर्यसारं स सस्वर्णामलसारकः।
शान्तावसादप्रासादोद्धारश्च विहितस्तया ॥ ३३९१ ॥
सत्त्वानामिव भृत्यानां कोपौर्वविकृते नृपे।
उदन्वतीव शरणं सिन्धुर्हैमवतीव सा ॥ ३३९२ ॥
स्थिरप्रसादे भूपाले निग्रहानुग्रहौ क्षणात्।
भूभुजामपि संवृत्तावविच्छिन्नस्तादिच्छया[1] ॥ ३३९३ ॥
सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया।
मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ॥ ३३९४ ॥
उत्पत्तिभूमिसुलभानुभवो न भूम्ना
कस्याप्यहो व्यभिचरत्यनुभावभावः।
तेजस्तमोविलुठनव्रतमुष्णभानो-
श्छेदं तदुत्थमकरोत्तमसोपि चक्रम् ॥ ३३९५ ॥
भुवनाद्भुतसाम्राज्यमार्जनो भूभुजाभवत्।
प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलावनिः ॥ ३३९६ ॥
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि।
पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ॥ ३३९७ ॥
राज्ञा प्राजिधरस्याजौ तरसा भूभुजोनुजः।
वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः ॥ ३३९८ ॥

---

१ अविच्छिन्नौ इति स्यात्।

रड्डां शरणमेत्योच्चैर्मानोत्कट्यो घटोत्कचः ।
भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं पराम् ॥ ३३९९ ॥
कुलकम् ॥

कृतसाहायकोमात्यै राज्ञः सप्रज्जिमङ्गदम् ।
राज्यं प्राभ्रंशयद्भ्रातृद्रुहं पञ्चवटो नृपम् ॥ ३४०० ॥
अलङ्घ्यत्तत्प्रभावात्स्फारदानाम्बुनिर्भरात् ।
सरितं खङ्गवल्लीं च कृष्णां विद्वेषिगोचराम् ॥ ३४०१ ॥
द्वितीयस्योरशाभर्तुरकीर्तिर्निर्जयासृजत् ।
देवप्रभावाद्योधाग्रमत्युग्रपुरमग्रहीत् ॥ ३४०२ ॥
[1]शीतोष्णवारणशशिद्योतकल्लोलितास्ततः ।
बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ॥ ३४०३ ॥
समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गताः ।
तावत्येवाप्तराजस्य पञ्चविंशतिवत्सरे ॥ ३४०४ ॥
इयद्दृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः ।
परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ॥ ३४०५ ॥
अम्भोपि प्रवहत्स्वभावमशनै राश्यानमश्मायते
ग्रावोम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते
कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः॥ ३४०६॥

---

१ सितोष्ण इत्युचितम् ।

प्रयाते अधिकेप्यर्धसमाषट्कशते कलेः।
कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ॥ १ ॥
सूनुर्दामोदरोस्याथ तस्य पत्नी यशोमती।
गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन् ॥ २ ॥
पञ्चत्रिंशतमज्ञातानुग्रहाभिजनाभिधान्।
राजाभवल्लवो नाम सूनुस्तस्य कुशस्ततः ॥ ३ ॥
द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु।
गोधरोथान्यकुलजः सुवर्णाख्यस्तदात्मजः ॥ ४ ॥
तज्जन्मा जनकोप्यासीत्सूनुः शच्याः शचीनरः।
अथाशोकोभवद्भूभृद्राज्ञोस्य प्रपितृव्यजः ॥ ५ ॥
तज्जौ जलौकाः संदिग्धवंशो दामोदरस्ततः।
तुल्यं त्रयोथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥ ६ ॥
अभिमन्युस्तृतीयश्च गोनन्दोथ विभीषणः।
ताविन्द्रजिद्रावणश्च पितापुत्रौ क्रमान्नृपौ ॥ ७ ॥
अन्यो बिभीषणः सिद्ध उत्पलाख्यश्च तत्सुतः।
पश्चात्ततो हिरण्याक्षो हिरण्यकुल इत्यभूत् ॥ ८ ॥
राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा।
............................................................ ॥ ९ ॥
क्षितिनन्दो बकात्मजो वसुनन्दस्तदात्मजः।
नरोन्योक्षस्ततो गोपादित्यगोकर्णकौ क्रमात् ॥ १० ॥
तस्मान्नरेन्द्रादित्योभूत्तत्पुत्रोन्धयुधिष्ठिरः।
तस्मिन्प्रभ्रंशिते भृत्यैरन्याभिजनसंभवः ॥ ११ ॥
भूपः प्रतापादित्योभूज्जलौकोपि तदात्मजः।
तुञ्जीनो निःसुते तज्जो विजयोन्यकुलोद्भवः ॥ १२ ॥

जयेन्द्रस्तत्सुतोपुत्रः सचिवः संधिमानभूत् ।
युधिष्ठिरस्य पौत्रेण गोपादित्यात्मजन्मना ॥ १३ ॥
श्रीमेघवाहनेनाथ गोनन्दस्योदितं कुले ।
ततः प्रवरसेनोभूद्भूपः कश्मीरमण्डले ॥ १४ ॥
तत्सूनुश्च हिरण्योभूत्पालयन्क्षितिमण्डलम् ।
मातृगुप्तोभवद्दत्तराज्यस्तेन शकारिणा ॥ १५ ॥
ततः प्रवरसेनोन्यस्तोरमाणात्मजः क्षितिम् ।
लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः ॥ १६ ॥
ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः ।
क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपतिः ॥ १७ ॥
बालादित्यश्चोदभवद्विक्रमादित्यनन्दनः ।
बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥ १८ ॥
सूनुर्दुर्लभकस्तस्य चन्द्रापीडोभवत्ततः ।
तारापीडोनुजन्मास्य मुक्तापीडोस्य चानुजः ॥ १९ ॥
भूपावास्तां कुवलयापीडो द्वैमातुरोस्य च ।
वज्रादित्यः सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ॥ २० ॥
पृथिव्यापीडसंग्रामापीडावास्तां महीभुजौ ।
जयापीडोस्य मन्त्री च जज्जः पुत्रावपि क्रमात् ॥ २१ ॥
ललितापीडसंग्रामापीडौ ज्येष्ठात्मजस्ततः ।
श्रीचिप्यटजयापीडः कल्पपाल्युद्भवोभवत् ॥ २२ ॥
अभिचारेण तं हत्वा सामत्यादितरेतरम् ।
उत्पलाद्यैरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ॥ २३ ॥
भ्रातुः पुत्रोजितापीडो जयापीडस्य तत्पदे ।
अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥ २४ ॥

तमुत्पाट्योत्पलापीडोस्याजितापीडनन्दनः ।
अवन्तिवर्मा शूरेण तं निवार्याथ मन्त्रिणा ॥ २५ ॥
नप्तोत्पलस्य विदधे साम्राज्ये सुखवर्मजः ।
सूनुः शंकरवर्मा स गोपालस्तस्य चात्मजः ॥ २६ ॥
रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः ।
सुगन्धाख्या तयोर्माता तं विनाश्याथ भूभुजम् ॥ २७ ॥
शूरवर्मप्रनप्तारं पङ्गुं तन्त्रिपदातयः ।
चक्रुर्निर्जितवर्माणं ततः पार्थस्ततः क्रमात् ॥ २८ ॥
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः ।
चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥ २९ ॥
उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्मणि ।
राज्याद्भ्रष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्करः ॥ ३० ॥
प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् ।
राज्ये वक्राङ्घ्रिसङ्ग्रामस्तस्थौ निष्पाद्य तं ततः ॥ ३१ ॥
अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् ।
क्षेमगुप्तः सुतोस्यासीदभिमन्यौ तदात्मजे ॥ ३२ ॥
शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते ।
ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥ ३३ ॥
पौत्रे तयैव निहते स्वयं दिद्दाख्यया कृते ।
राज्ये संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥ ३४ ॥
हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः ।
कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥ ३५ ॥
उभावुत्कर्षहर्षाख्यावपि निष्पाट्य भूपतिम् ।
हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥ ३६ ॥

भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः ।
मल्लाभिधानादुद्भूतो भूपतामुच्चलोभजत् ॥ ३७ ॥
द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः ।
शङ्कराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥ ३८ ॥
गग्गेन निहते तस्मिन्मल्लो द्वैमातुरोप्यभूत् ।
तस्योच्चलमहीभर्तुर्भ्राता निर्बध्य तं बली ॥ ३९ ॥
सुस्सलाख्योग्रहीद्राज्यं माल्लिरुच्चलसोदरः ।
विरक्तैः पातिते तस्मिन्राज्याद्भृत्यैर्नृपः कृतः ॥ ४० ॥
षण्मासान्हर्षभूभर्तृनप्ता भिक्षाचराभिधः ।
पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥ ४१ ॥
क्रमाल्लवन्यैर्विश्वस्तैर्द्वैराज्योद्वेजिते हते ।
लवन्यान्निखिलांस्तं च हत्वा भिक्षाचरं नृपम् ॥ ४२ ॥
सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः ।
नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥ ४३ ॥
गोदावरी सरिदिवोत्तुमुलैस्तरङ्गै-
र्वक्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीकान्तराजविपुलाभिजनाब्धिमध्यं
विश्रान्तये विशति राजतरङ्गिणीयम् ॥ ४४ ॥



# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhândârkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. Bühler ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. The Sanskrit Text and various Readings, Part I. ... ... ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. Bühler... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn ... ... ... ... ... | 0 | 7 | 0 |
| No. V.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part I., Cantos I.—VI. ... ... | 1 | 0 | 0 |
| No. VI.—Mâlavikâgnimitra: a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M. A. ... ... ... ... ... ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part II., Cantos VII.—XIII ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX. ... ... ... ... ... ... | 0 | 8 | 0 |
| No. X.—The Das'akumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. Bühler ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XI.—The Nîtis'ataka and Vairâgyas'ataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M. A. (copies not available.) ... | | | |
| No. XII.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... | 0 | 8 | 0 |
| No. XIII.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, | | | |

| | | Rs. | a. | p. |
|---|---|---|---|---|
| | by S. P. Pandit, M. A. Part III., Cantos XIV.—XIX ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. | XIV.—Vikramâṅkadeva-Charita. Life of king Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler (copies not available.) | | | |
| No. | XV.—Mâlatî-Mâdhava; a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhâṇḍârkar, M. A. (second Ed. in the Press.)... ... ... ... ... ... ... | | | |
| No. | XVI.—Vikramorvas'î: a Drama by Kâlidâsa. Edited with Notes, by Shankar P. Pandit, M. A... | 1 | 4 | 0 |
| No. | XVII.—Hemachandra's Des'înâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler, Part I. Text and Critical Notes, by Professor Pischel. ... ... ... ... ... | 1 | 0 | 0 |
| No. | XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete. Parts I, II & III. ... ... ... ... ... ... | 9 | 0 | 0 |
| No. | XIX. Ditto ditto by ditto. Vol. I. Part. II. | 1 | 0 | 0 |
| No. | XX. Ditto ditto by ditto. Vol. I. Part. III. | 1 | 0 | 0 |
| No. | XXI. Ditto ditto by ditto. Vol. II. Part. I. | 1 | 0 | 0 |
| No. | XXII. Ditto ditto by ditto. Vol. II. Part. II. | 1 | 0 | 0 |
| No. | XXIII. Vâsishṭha Dharmas'âstram. Edited, with Notes, by Dr. A. A. Führer ... ... ... | 0 | 8 | 0 |
| No. | XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson. (copies not available.) ... ... ... | | | |
| | Do. Vol. II. Introduction and Notes, by do. ... | 2 | 0 | 0 |
| No. | XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kâthavaté. (copies not available.) ... | | | |
| No. | XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol II. Part III. ... | 1 | 0 | 0 |
| No. | XXVII.—Mudrârâkshasa, by Vis'âkhadatta, with the Commentary of Dhuṇḍirâja. Edited, with Notes, by K. T. Telang. (Copies not available.) | | | |
| No. | XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... | 1 | 0 | 0 |
| No. | XXIX.—Do.-Do. of Do. by Do. Vol. III. Part II. | 1 | 0 | 0 |
| No. | XXX.—Ditto do. of do. by do. Vol. III. Part III. | 1 | 0 | 0 |
| No. | XXXI.—Subhâshitâvalî of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgâprasâd ... | 2 | 8 | |

Rs. a. p.

No. XXXII.—Tarka-Kaumudî of Laugakshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... 0 12 0

No. XXXIII.—Hitopades'a of Nârâyaṇa. Edited by Dr. P. Peterson. ... ... ... ... ... 0 14 0

No. XXXIV.—The Gaudavaho, by Vâkpati. Edited by Shankar P. Pandit ... ... ... ... 3 0 0

No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... 0 7 0

No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr P. Peterson ... 4 0 0

No. XXXVII.—S'ârṅgadharapaddhati. Edited by Dr. P. Peterson. Vol. I. ... ... ... ... 3 0 0

No. XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... ... ... 2 0 0

No. XXXIX.—A Concordance to the principal Upanishads and Bhagavadgitâ, by the same author. 8 0 0

No. XL.—Eleven Atharvaṇa Upanishads, with Dîpikâs, by the same author ... ... ... ... ... 2 8 0

No. XLI.—Handbook to the study of the Ṛigveda, by Dr. P. Peterson. Part I. ... ... ... ... 3 0 0

No. XLII.—The Das'akumâracharita of Daṇḍin, Part II. (completing Dr. Bühler's Edition). Edited with Critical and Explanatory Notes by Dr. P. Peterson. 0 8 0

No. XLIII.—Handbook to the study of the Ṛigveda, by Dr. P Peterson. Part II. comprising the Seventh Maṇḍala with the commentary of Sâyana... 5 0 0

No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sûtras and the various Readings of the Hiraṇyakeshî-Dharmasûtra, by Dr. G. Bühler Part I. ... ... ... ... ... 2 12 0

No. XLV.—Râjataraṅginî. Edited by Pandit Durgâprasâd, Part I. containing the first 7 (seven) Tarangas ... ... ... ... ... ... 3 0 0

No. XLVI.—Patañjali's Yogasûtras. Edited with the Scholium of Vyâsa and the Commentary of Vâchaspati, by Râjârâm Shâstrî Bodas ... ... ... 3 4 0

No. XLVII.—Pârâs'ara Dharma Saṁhitâ with the Commentary of Sâyana Mâdhavâchârya, Vol. I. Part I. Edited by Pandit Vâman Shâstrî Islâmpurkar ... 4 4 0

No. XLVIII.—Ditto do. of do. by do. Vol. I Part II. 4 0 0

No. XLIX.—Nyâyakos'a. 2nd Edition. Edited by Mahâmahopâdhyâya Bhîmâchârya Zaḷkîkar ... ... 12 0 0

No. L.—Âpastamba Dharmasûtra, Part II. Edited by Dr. G. Bühler ... ... ... ... ... 1 8 0